श्रीगणेशायनमः

समृद्धंसौभाग्यं सकल वसुधायाः किमपितन्महैश्वर्यं लीला जनितजगतः खण्डपरशोः। श्रुतीनांसर्वस्वं सुकृत मथ मूर्त्तं सुमनसां सुधासौन्दर्यन्ते सलिल माशिवंनः सम-यतु ॥ १ ॥ दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां द्रुतं-दूरीकुर्वन् सकृदपि गतो दृष्टि सरणीम्। अपिद्रागविद्या द्रुम दलनदीक्षा गुरुरिह प्रवाहस्तेवारां श्रियमयमपारां दिशतुनः ॥२॥ उदञ्चन्मार्तण्डस्फुटकपट हेरम्बजननी कटाक्षव्याक्षेप क्षणजनित संक्षोभनिवहाः। भवन्तु

त्वदङ्गन्तो हरशिरसि गङ्गा तनुभवस्तरङ्गाः प्रोत्तुङ्गा दुरि-
तभयभङ्गाय भवताम् ॥ ३ ॥ तवालम्बादम्बस्फुरदलघु
गर्वेण सहसा मया सर्वेऽवज्ञा सरणिमथनीताःसुरगणाः
इदानीमौदास्यं भजसि यदि भागीरथितदा निराधारो
हारो दिमिकथयकेषामिहपुरः ॥ ४ ॥ स्मृतिंयाता पुंसा
मकृत सुकृतानामपिचया हरत्यंतस्तंद्रांतिमिरमिवचंद्रां
शुसरणिः । इयंसाते मूर्तिः सकल सुरसंसेव्यसलिला
ममान्तःसन्तापं त्रिविधमपि पापं च हरताम् ॥५॥ अपि
प्राज्यं राज्यं तृणमिव परित्यज्य सहसा विलोलद्वानीरं तव

जनानितीरं श्रितवताम् । सुधातःस्वादीयः सलिलभर-
मातृप्तिपिवतां जनानामानन्दः परिहसति निर्वाण पद-
वीम् ॥ ६ ॥ प्रभाते स्नातीनां नृपतिरमणीनां कुचतटी
गतोयावन्मातर्मिलतितव तोयैर्मृगमदः । मृगास्तावद्वै
मानिकशत सहस्रैःपरिवृता विशन्ति स्वच्छन्दं विमल-
वपुषो नन्दनवनम् ॥ ७ ॥ स्मृतंसद्यः स्वान्तं विरचयति
शांतं सकृदपि प्रगीतं यत्पापं झटितिभवतापं च हरति ।
इदंतद्गङ्गेति श्रवणरमणीयं खलुपदं ममप्राणप्रान्तर्वदन
कमलान्तर्विलसतु ॥ ८ ॥ यदंतःखेलंतो बहुलतर

गं० २

संतोषभरिता नकाका नाकाधीश्वरनगरसाकांक्षमनसः। निवासाल्लोकानां जनि मरण शोका पहरणं तदेतत्तेतीरं-श्रमशमनधीरं भवतुनः ॥९॥ नयत्साक्षाद्वेदै रपिगलित भेदैरवसितं नयस्मिन् जीवानां प्रसरति मनोवागवसरः। निराकारं नित्यं निजमहिमानिर्वासिततमो विशुद्धं यत्तत्वं सुरतटिनितत्वंनविषयः ॥ १० ॥ महादानैर्ध्यानैर्बहु-विध वितानैरपिचयन्नलभ्यं घोराभिः सुविमल तपोराशि-भिरपि ॥ अचिन्त्यं तद्विष्णोः पदमखिल साधारणतया ददानाकेनासित्वमिह तुलनीया कथयनः ॥ ११ ॥

ल. २

नृणामीक्षामात्रा दपिपरि हरन्त्या भवभयं शिवायास्ते-
मूर्तेः क इह माहिमानं निगदतु ॥ अमर्षम्ला-
नायाः परममनुरोधं गिरिभुवो विहाय श्रीकण्ठः
शिरसिनियतं धारयातियाम् ॥ १२ ॥ विनिंद्यान्युन्मत्तै
रपिचपरिहार्याणि पतितैरवाच्यानिब्रात्यैः सपुलकमपा-
स्यानि पिशुनैः॥ हरंती लोकानामनवरतमेनांसिकियतां
कदाप्यश्रान्तात्वं जगतिपुनरेका विजयसे ॥ १३ ॥
स्खलन्ती स्वर्लोका दवनितलशोका पहृतये जटाजूटग्र-
न्थौ यदसिविनिबद्धा पुरभिदा ॥ अयेनिर्लोभानामपि

मनासिलोभं जनयतां गुणानामेवायं तवजननिदोषः परि-
णतः ।। १४ ।। जडानंधान्पंगून्प्रकृतिबधिरानुक्ति विक-
लान् ग्रहग्रस्तानस्ताखिल दुरितनिस्तार सरणीन् ।।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततोनरानम्बत्रातुं
त्वमिह परमं भेषजमसि ।। १५ ।। स्वभावस्वच्छानां
सहजशिशिराणा मयमपा मपारस्तेमातर्जयति महिमा-
कोऽपि जगति ।। मुदायंगायन्ति द्युतलमनवद्यद्युति भृतः
समासाद्याद्यापि स्फुटपुलकसांन्द्राः सगरजाः ।। १६ ।।
कृतक्षुद्रैनस्कानथ झटितिसतप्तंमनसः समुद्धर्तुंसन्ति

त्रिभुवनतलेतीर्थनिवहाः ॥ अपिप्रायाश्चित्त प्रसरणप-
थातीत चरितान्नरान्दूरीकर्तुं त्वामिव जननित्वंविजयसे
॥ १७ ॥ निधानंधर्माणां किमपि च विधानंनवमुदां
प्रधानंतीर्थाना ममलपरिधानंत्रिजगतः ॥ समाधानं
बुद्धेरथ खलु तिरोधानमाधियां श्रियामाधानंनः परि-
हरतु तापं तववपुः ॥ १८ ॥ पुराधावंधावंद्रविण मादिरा
घूर्णितदृशां महीपानां नाना तरुणतरखेदस्य नियतम्
ममैवायंमन्तुः स्वहित शतहन्तुर्जडधियो वियोगस्ते-
मातर्यदिह करुणातःक्षणमपि ॥ १९ ॥ मरुल्लीलालोल-

गं० ४

क्षहरिलुलिताम्भोज पटलीस्खलन्त्या सुव्रातच्छुरणावि सरत्कौंकुमरुचि ॥ सुरस्त्रीवक्षोज क्षरदगरुजम्बाल-जटिलं जलं तेजम्बालं मम जननि जालं जरयतु ॥२०॥ समुत्पत्तिः पद्मा रमणपदपद्मा मलनखान्निवासः कंदर्प प्रतिभट जटाजूट भवने ॥ अथायं व्यासङ्गो हतपतित निस्तारण विधौ नकस्मादुत्कर्षस्तवजननि जागर्तु जगति ॥ २१ ॥ नगेभ्योयांतिनां कथय तटिनीनां कत-मया पुराणांसंहर्तुः सुरधुनि कपर्दोधिरुरुहे ॥ कयाच-श्रीभर्तुः पदकमलमक्षालि सलिलैस्तुलालेशोयस्यां

ल, ४

तव जननि दीयेत कविभिः ॥ २२ ॥ विधत्तांनिःशङ्कं निरवधि समाधिं विधिरहो सुखंशेषे शेतांहरिरविरतं-नृत्यतुहरः कृतंप्रायश्चित्तैरलमथ तपोदानयजनैः सावित्री कामानां यदि जगति जागर्ति जननि ॥ २३ ॥ अनाथः स्नेहार्द्रांविगलितगतिः पुण्यगतिदां पतन् विश्वोद्धर्त्रीं-गदाविगलितः सिद्धभिषजम् ॥ सुधासिंधुं तृष्णाकुलि-तहृदयो मातरमयं शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥ २४ ॥ विलीनोवै वैवस्वत नगरकोला-हलभरो गता दूतादूरं क्वचिदपि परेतान्मृगयितुम् ॥

विमानानांव्रातो विदलयतिवीथीर्दिविषदां कथाते कल्याणी यदवधि मही मण्डलमगात् ॥ २५ ॥ स्फुरत्कामक्रोध प्रबलतर सञ्जात जटिल ज्वरज्वाला जालज्वलित वपुषांनःप्रतिदिनम् । हरंतांसंतापं कमपि मरुदुल्लासलहरिच्छटाचञ्चत्पाथः कणसरणयो दिव्य सरितः ॥ २६ ॥ इदंहि ब्रह्माण्डं सकल भुवना भोग भवनं तरङ्गैर्यस्यांतर्लुठति परितस्तिंदुकमिव । सएष श्रीकंठ प्रविततजटा जूटजटिलो जलानां संघात स्तव जनानितापं हरतुनः ॥ २७ ॥ त्रपंते तीर्थानि त्वरित-

मिह यस्योद्धृतिविधौ करंकरौंकुर्वैत्यपि किलकपालि प्रभृ-
तयः । इमंतंमामम्बत्वमियमनुकम्पार्द्रं हृदये पुराना
सर्वेषा मघमथनदर्पं दलयासि ॥ २८ ॥ श्वपाकानांव्रातै
रमितविचिकित्सा विचलितैर्विमुक्तानामेकं किल सदन
मेनः परिषदाम् । अहोमामुद्धर्तुं जननि घटयंत्याः परि
करं तवश्लाघां कर्तुंकथमिव समर्थो नरपशुः ॥ २९ ॥
नकोऽप्यैतावंतं खलुसमयमारभ्यामिलितो यदुद्धारादारा
द्भवतिजगतो विस्मयभरः । इतीमामीहांते मनसि चिर
कालं स्थितिवति मयंसंप्राप्तोहं सफलयितुमम्ब प्रण-

यिनः ॥३०॥ श्ववृत्तिव्यासङ्गो नियतमथ मिथ्या प्रल-
पनं कुतर्केष्वभ्यासः सततपरपैशुन्यमननम्। अपि श्रावं
श्रावं ममतुपुनरेवं गुणगणान् ऋतेत्वत्कोनाम क्षणमपि
निरीक्षेतवदनम् ॥ ३१ ॥ विशालाभ्यामाभ्यां किमिह
नयनाभ्यां खलुफलं नयाभ्यामालीढा परमरमणीया
तवतनुः। अयंहिन्यक्कारो जननिमनुजस्य श्रवणयोर्ययो-
र्नांतर्यातस्तव लहरिलीला कलकलः॥ ३२ ॥ विमानैः
स्वच्छंदं सुरपुरमयंते सुकृतिनः पतंतिद्राकपापा जन-
निनरकांतः परवशाः । विभागोयंतस्मान्नशुभमयमूर्तौ

जनपदे न यत्रत्वंलीलादलितमनुजा शेषकलुषा ॥ ३३ ॥ अपिघ्नंतोविप्रा न विरतमुपशांतो गुरुसतीः पिबंतोमैरेयं पुनरपि हरंतश्चकनकम् । विहायत्वय्यंते तनुम तनुदानाध्वरजुषांमुपर्यम्बक्रीडत्यखिल सुरसम्भावित पदाः ॥ ३४ ॥ अलभ्यं सौरभ्यं हरतिसततं यः सुमनसां क्षणादेवप्राणानपिविरहशस्त्र क्षतहृदाम् । त्वदीयानां लीला चलितलहरीणां व्यतिकरात्पुनीतेसोपिद्रा गहहपवमानस्त्रिभुवनम् ॥ ३५ ॥ कियन्तः सन्त्येके नियतभिहलोकार्थघटकाः परेपूतात्मानः कतिचपरलोकः प्रण-

गं० यिनः । सुखंशेतेमातस्तवखलुकूपातः पुनरयं जगन्नाथः ल०

७ शश्वत्त्वायिनिहितलोक द्वयभरः ॥३६॥ भवत्याहिव्रात्या-

धमपातितपाखण्डपरिषत्परित्राणास्नेहः श्लथायितुमशक्यः

खलु यथा । ममाप्येवंप्रेमा दुरितनिवहेष्वम्बजगति

स्वभावोयंसर्वै रपिखलुयतो दुष्परिहरः ॥ ३७ ॥

प्रदोषांतनृत्यत्पुरमथन लीलोद्धृतजटा तटाभाग

प्रेंखल्लहरि भुजसंतान विधुतिः ॥ बिलक्रोडक्रीडज्जल

डमरुटंकार सुभगास्तिरोधत्तां तापं त्रिदश तटिनी ताण्ड-

वविधिः ॥ ३८ ॥ सदैव त्वय्येवार्पितकुशलचिंता भर- ७

मिमं यदि त्वंमामम्बत्यजसि समयेस्मिंसुविषमे ॥ तदा विश्वासोयं त्रिभुवनतलादस्तमयते निराधाराचेयं भवति खलु निर्व्याजकरुणा ॥ ३९ ॥ कपर्दादुल्लस्य प्रणाय मिलदर्धाङ्गयुवतेः पुरारेः प्रेखन्त्यो मृदुल तरसी-मंतसरणौ ॥ भवान्यासापत्न्यस्फुरित नयनं कोमलरुचा करेणाक्षिप्तास्ते जननिविजयन्तां लहरयः ॥४०॥प्रपद्यंते लोकाः कति न भवतीमत्रभवती मुपाधिस्तत्रायंस्फुरति यदभीष्टं वितरसि ॥ अयेतुभ्यं मातर्ममतु पुनरात्मा सुरधुनिस्वभावादेवत्वय्यमित मनुरागं विधृतवान्॥४१॥

गं०

९

ललाटे यालोके रिहखलुसल्लीलं तिलकिता तमोहंतुंधत्ते तरुणतरमार्तंड तुलनाम् ॥ विलुंपंतीसद्यो विधिलिखित दुर्वर्णसरणिं त्वदीयासा मृत्स्ना ममहरतुकृत्स्नामपि-शुचम् ॥४२॥ नरान्मूढान् तत्तज्जनपद समासक्त मनसो हसंत:सोल्लासं विकच कुसुमव्रातमिषत: ॥ पुनाना:सौरि-भ्य: सततमलिनोऽनित्यमलिनान् सखायोन: संतु त्रिदश-तटिनीतीरितरव: ॥४३॥ यजंत्येके देवान् कठिन तरसेवां स्तदपरे वितान व्यासक्ता यमनियमरक्ता: कतिपये ॥ अहं तुत्वन्नाम स्मरणवृतकामास्त्रिपथगे जगज्जालंजाने

ल०

जननितृण जालेनसदृशम् ॥ ४४ ॥ अविश्रान्तजन्मा वधिसुकृतजन्मार्जनकृतां सतांश्रेयः कर्तुं कतिनकृतिनः सन्तिविबुधाः ॥ निरस्तालम्बानामकृतसुकृतानां तु भवतीं विनाऽमुष्मिंलोके नपरमवलोकेहितकरम् ॥४५॥ पयः पीत्वामातस्तवसपदियातः सहचरैर्विमूढैः संरन्तुं क्वचिदपिनाविश्रान्तिमगमम् ॥ इदानीमुत्सङ्गे मृदुपवन-संचारशिशिरे चिरादुन्निद्रंमां सदयहृदये स्वापयाचिरम् ॥ ४६ ॥ वधानद्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमयपुनः पन्नगगणैः ॥ नकुर्यास्त्वंहेला मित-

रञ्जन साधारणतया जगन्नाथस्यायं सुरधुनि समुद्धार-
समयः ॥ ४७ ॥ शरच्चन्द्रश्वेतां शशिसकल श्वेताल
मुकुटां करैः कुम्भाम्भोजे वरभय निरासौच दधतीम् ॥
सुधाधाराकारा भरणा वसनां शुभ्रमकर स्थितांत्वांयध्या-
यन्त्युदयातिनतेषांपरिभवः ॥ ४८ ॥ दराम्मितसमुल्ल-
सद्वदनकांति पूरामृतैर्भवज्वलन भर्जिता नानिशमूर्ज-
यंतीनरान् चिदेकमयचन्द्रिका चयचमत्कृतिं तन्वंती
तनोतु ममशंतनोः सपदिशंतनो रंगना ॥ ४९ ॥
मंत्रैर्मीलितमौषधैर्मुकुलितं त्रस्तंसुराणांगणैः स्रस्तंसा-

न्द्र सुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः। वीचिक्षालित कालिया हितपदे स्वर्लोककल्लोलिनि त्वं तापंनिरयाधुना ममभव ज्वालावलीढात्मनः ॥ ५० ॥ द्यूतेनागेन्द्रकृत्ति प्रमथगणमणि श्रेणिनंदीन्दुमुख्यं सर्वस्वं हारयित्वा-स्वमथपुरभिदि द्राक्पणीकर्तु कामे। साकूतंहैमवत्य मृदुलहसितयावीक्षितायास्तवांब व्यालोलोल्लासिवल्गल्लहरि नट घटि तांडवंनः पुनातु ॥ ५१ ॥ विभूषितानंगरिपूत्तमांगा सद्यः कृतानेकजनार्तिभंगा। मनो हरोत्तुंगचलत्तरंगा गंगाममांगान्यमलीकरोतु ॥ ५२ ॥ इति ॥

# विज्ञापन ।

## इन पुस्तकों को अवश्य पढ़िये ।

स्वर्ग वासी महाराजा सर कीर्तिशाह बहादुर के० सी० एस० आई० का संक्षिप्त जीवन चरित्र । मूल्य =)

सत्य नारायण की असल कथा । मूल्य =)

पुरातन शिक्षा—लेखक पं० हरिकृष्ण रतूड़ी वजीर टिहरी (गढ़वाल) मूल्य ।)

विवाह प्रबन्ध—ले० बा० मुकन्दीलाल लंडन । मूल्य ≡)

सत्य प्रेम—शिक्षापूर्ण उपन्यास मूल्य ॥)

सुदामा की बाराखड़ी मूल्य )॥।

चाणक्यनीति । मूल्य ।)

भजन प्रभाती । मूल्य -)

हमारे यहां छपाई का काम बड़ी सफाई के साथ और थोड़े मूल्य पर किया जाता है ।

मैनेजर,

गढ़वाली प्रेस, देहरादून ।

